म्नेरिनि किं ? पात्राड् ।

*संसहयोः समिसध्री ॥ २५७ ॥ ससह स्थाने समिसध्रि इत्येतावादेशौ भवत अचतौ कौ परत. । सम्यड् । सध्र्यड् ।समीचीसध्रीची।

*तिरसः तिर्र्ये ॥ २५८ ॥ तिरसः तिरि इत्ययमादेशो भवति अकारादावचतौ परतः । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिर्यग्भ्या । ए इति किं ? तिरश्चः । तिरश्ची ।

*द्व्यन्तर्गेरीदपोऽनाप् ॥ २५९ ॥ द्व्यन्त र्भ्यां अनवर्णान्तात् गेश्चाप, ईत्व स्यात् । द्वीपः । अन्तरीप । समीप । नीप । वीपं । अनादिति किं ? प्राप । पराप ।

देशेऽनोरुः ॥ २६० ॥ देशार्थेऽनोः पर स्याप उर्भवति । अनूपः । देशे इति किं ? अन्वीपो ग्रामः ।

छकारकेऽन्यस्य दुक् ॥२६१॥ छे कारके चान्यस्य दुगागमो भवति।अन्यदीय।अन्यत्कारकं।

* रागोत्सुकोत्या।स्थितास्थाशाशिष्यताभस्य ॥ २६२ ॥ तातभातवर्जितस्यान्यस्य दुगागमो भवति रागादिषु परत । अन्यद्राग । अन्य दुत्सुक । अन्यदूतिः । अन्यदास्थितः । अन्यदास्था । अन्यदाशा । अन्यदाशीः ।अताभस्येति किं ? अन्यस्यान्येन वा रागः—अन्यरागः ।

वाऽर्थे ॥ २६३॥ अताभातस्यान्यस्यार्थे वा दुग् भवति । अन्यदर्थः । अन्यार्थ ।

+ध्यस्येङ् वेऽदृत्के मातरि ॥२६४॥ध्यात स्य यमे अकार ऋकार ककारान्ते मातरि घौ वा ईश भवति । कारीषगन्ध्या माता अस्य कारीषगंधीमात । कारीषगन्ध्यामातः । कारीषगंधीमाता । कारीषगन्ध्यामाता । कारीषगंधीमातृकः । कारीषगन्ध्यामातृकः । ध्यस्येति किं ? इभ्यामाता । व इति किं ? कारीषगन्ध्यामाता ।

*वर्गौ ॥ २६५ ॥ ध्यस्य वे बधौ परे ईश् भवति । कारीषगंधीबन्धु । कौमुदगंधीबन्धु ।

*पे पुत्रपत्योः ॥ २६६ ॥ पसे पुत्रपत्योः ध्यस्य ईश भवति । कारीषगंधीपुत्रः । कारीषगंधीपतिः । कौमुदगंधीपुत्र । कौमुदगंधीपति । प इति किं ? कारीषगन्ध्यापतिर्ग्रामः । पुत्रपत्यो रिति किं ? कारीषगन्ध्याकुल ।

यस्कोः पेऽचि ॥२६७॥ को कद् भवति पसे अजादौ घौ परे । कदज । कदन । कद शन । प इति किं ? किमो राजा । कुष्ट्रः । कश्वः । अचीति किं ? कुभोजन ।

रथवदे ॥ २६८॥ कोः कद् भवति रथ वदयोः परतः । कद्रथ । कद्वदः ।बसेऽपि कद्रथो राजा । कद्वदः खल ।

तृणे जातौ ॥ २६९ ॥ को कद् भवति तृणे घौ जात्यर्थे । कत्तृण । कुतृणान्यन्यत्र ।

कत्त्रिः ॥ २७० ॥ कोः किमो वा त्रौ घौ परे कन्निपात्य । कत्त्रयः । कात्रिः ।

का पथ्यक्षे ॥ २७१ ॥ कोः का भवति पथ्यक्षयोः परत । कापथः । काक्ष ।

*अल्पे ॥ २७२ ॥ ईषदर्थे कोः का भवति। ईषन्मधुर काmधुर । काकटुक । कालवण ।

पुरुषे वा ॥ २७३ ॥ कोर्वा का- स्यात् पुरुषे परतः । कापुरुषः, कुपुरुषः ।

कव चाष्णे ॥ २७४ ॥ कोः कवादेशो भवति का च वा उष्णे परे । कवोष्ण । कोष्ण । कदुष्ण ।

×मास्पाकमांस्पचने ॥ २७५ ॥ मांसस्य पाकपचनयोःपरत ख - वा निपात्यते।मास्पाक । मासपाकः । मास्पचनं । मासपचन ।

×सम स्वं तते ॥ २७६ ॥ समस्तते परत. ख वा स्यात् । सतत । संतत ।

*स्कुसि ॥ २७७ ॥ समुत्क्रम्य कृञोऽवयवे सकारे परे समः स वा भवति।सम्स्कर्ता।सम्कर्ता। सीति किं ? संचस्कार ।

*सम्तुमोर्मनः कामे ॥ २७८ ॥ सम्तुमोः स भवति मनसि कामे च परतः । समनाः । सकामः । भोक्तुमनाः । भोक्तुकामः ।

*व्येऽवश्यमः ॥२७९॥ अवश्यमः म भवति व्यसंज्ञे परतः । अवश्यकर्तव्य । अवश्यदेयं ।

*पृषोदरादयः ॥ २८० ॥ पृषोदरप्रकाराः शब्दाः साधवो भवन्ति। पृषदुदरमस्य पृषोदरः। तद्वत्र । वारिणो वाहक —बलाहकः । मह्यां रौति मयूरः । शवानां शयन—श्मशानं । पिशितमश्नाति पिशाचः । ऊर्ध्वौ कर्णौ अस्य उलूक । मेहनस्य खस्य माला मेखला । जीवनस्य मूतः बंधः जीमूतः । ऊर्ध्वं खमस्य उलूखल । मुहुः स्वन लाति मुशल । दिवि ओको येषां ते दिवौकसः । कौ जीर्यतीति कुञ्जरः । मह्यां शेते महिषः । बलं वर्द्धयति बलीवर्द्दः । हलस्य ईषा हलीषा । लांगलीषा । कुलान्यटतीति कुल्टा । न स्त्री न पुमान् नपुंसक । नास्मिन्नक दु खमस्तीति नाक । न आप्यतेऽसौ नापित । न मीयतेऽसौ नमेरुः । नातेरण भवतीति नातरीयकं। शकस्याधु शकंधु । कर्कंधुः ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धूर्तां तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तं॥

। दिग्भ्यस्तीरस्य तारः ॥२८१ ॥ दिग्वाचिभ्यः परस्य तीरस्य तारादेशो भवति । दक्षिणतारं । उत्तरतारं । पूर्वतारं । दिग्भ्य इति किं? गंगातीरं । उत्तरसूत्रस्थवाग्रहणेन सिंहावलोकितन्यायेन दक्षिणतीरमपि स्यात् ।

*दिपविसायाद्वाऽह्नस्याह्न् कौ ॥२८२॥ दिसद्वाद् विसायाभ्यां चाह्नस्याहन् वा स्यात् कौ परत । द्व्यहनि।द्व्यह्नि।द्व्यह्ने।यावदहनि।यावदह्नि। यावदह्ने । व्यहनि । व्यह्नि । व्यह्ने ।सायाहनि । सायाह्नि । सायाह्ने ।दिपविसायादिति किं? पूर्वाह्ने । मध्याह्ने ।

*स्वचित्रनस्याविष्टाष्टपचभिन्नछिन्नछिद्रस्रुवस्वस्तिकस्य द्री कर्णे ॥२८३॥ स्वचिह्नवाचकस्य कर्णे घो दीर्घभवति विष्टादीन् मुक्त्वा । दात्राकर्णः । द्विगुणाकर्णः । शंकूकर्ण । स्वचिह्नस्येति किं ? शोभनकर्ण । लम्बकर्णः । अविष्टादेरिति किं ? विष्टकर्णः । अष्टकर्णः । पंचकर्ण । भिन्नकर्ण । छिन्नकर्ण । छिद्रकर्णः । स्रुवकर्ण । स्वस्तिककर्ण ।

नहिवृतिवृषिव्यधिरुचिसहितनौ कौ वागमे ॥२८४॥ नहादिषु क्विबंतेषु परेषु प्राचां घो दीर्घभवति । उपानत् । प्रावृत । प्रावृट् । मर्माविध् । नीरुट् । ऋतीषट् । परीतत् ।

*हविर्युक्ते कपालगवेऽष्टनः ॥ २८५ ॥ अष्टनः कपाले गवे च हविषि युक्तेर्थे च दीर्घभवति । अष्टाकपाल हवि । अष्टागव शकट । हविर्युक्त इति किं ? अष्टकपालः । अष्टगुः ।

*स्वौ ॥२८६॥ अष्टनः दीर्घभवति स्वौ।अष्टापदः कैलासः । अष्टाचक्र अष्टाविटप । स्वाविति किं ? अष्टधर्मेच्छित जिन ।

*गिरिवनेऽञ्जनकोटरादेः॥२८७॥गिरिवनयोः परतः अञ्जनादीनां कोटरादीनां च दीर्घभवति स्वौ। अञ्जनागिरिः । किंशुलकागिरिः । कुक्कुटागिरिः। इत्यादि । कोटरावण । मिश्रकावण । इत्यादि । अंजनकोटरादेरिति किं ? कृष्णगिरिः । मदनवनं । स्वाविति किं ? अंजनगिरिः । कोटरवन ।

*बहच्छरादीनां मत्यनजिरादेः ॥२८८॥ बह्वचा शरादीना च मतौ स्वे दीर्घभवति अजिरादींस्त्यक्त्वा । उदुम्बरावती । मशकावती । पुष्क-

रावती । अमरावती । शरावती । मुनीवती । ऋषीवती । वशावती । बह्वच्शरादीनामिति किं ? इक्षुमती । मधुमती । अनजिरादेरिति किं ? अजिरवती । खदिरवती ।

चितेः कपि ॥२८९॥ चितेः कपि स्थे दीर्घ यति । एकचितीकः। द्विचितीकः । त्रिचितीक ।

*विश्वस्य नरे ॥२९० ॥ विश्वस्य दीर्घभवति नरे परे खौ । विश्वानरः । विश्वनरो राजान्यत्र । नर इति किं ? विश्वसेनः ।

ऋषौ मित्रे ॥२९१ ॥ विश्वस्य मित्रे परे दीर्घभवति ऋष्यर्थ खौ । विश्वामित्र ऋषि । विश्वमित्रोऽन्य ।

*वसुराटो ॥२९२॥ विश्वस्य वसुराटोः परो दीर्घभवति । विश्वावसुः। विश्वाराट् । राडिति विकृतनिर्देशादिह न भवति । विश्वराजौ । विश्वराजः ।

*वहेऽपील्वादिकः ॥२९३॥ अपील्वादीनामिक वहे परतः खौ दीर्घभवति । ऋषीवह । मुनीवह । अपील्वादीति किं ? पील्वह । चारुवह । इक इति किं ? पिंडवह ।

गेः काशे ॥२९४॥ गरिगतस्य काशे घौ दीर्घभवति । नीकाश । वीकाश । अनूकाश । गेरिति किं ? साधुकाश । इक इत्येव-प्रकाशः

*ति ॥२९५॥ दा इत्येतस्मिन् द्वितकारादेशे परतो गेरिगतस्य दीर्घभवति । वीत्त । नीत्त । परीत्त । प्रण रिमम । तीति किं ? सुदत्त । इक इति किं ? प्रत्त । अवत्त ।

*घञि प्राय ॥२९६॥ घञन्ते घौ परतो गेर्दीर्घ भवति प्रायः । नीक्लेदः । नीमार्गः । अपामार्गः । प्राकारः । प्रासादः । प्रावारः । क्वचिन्न स्यात्-विषादः । प्रहारः । प्रकारः । प्रसादः । निषेधः । निनादः । क्वचिद्विकल्पः । प्रतिहारः । प्रतीहारः ।

वले ॥२९७॥ पूर्वस्य दीर्घभवति वलन्ते प्राय । कृषीवलः । आसुतीवलः ।

*इन्यात् ॥२९८॥ इजन्ते घौ पूर्वस्याकारादेशो भवति । केशाकेशि । कचाकचि । दण्डादण्डि । मुशलामुशलि । मुष्टामुष्टि । प्राय इति किं ? अस्यसि ।

*शुन ॥२९९॥ शुनःप्रायो दीर्घभवति । श्वादतः । श्वावर्णः श्वादंष्ट्रा । श्वावराह । श्वापुच्छ । न चास्ति । श्वगुणः । श्वयमपि । श्वपद । श्वापद ।

अन्यस्यापि ॥ ३०० ॥ अन्यस्यापिशब्दस्य घावघावपि दीर्घभवति । दक्षिणापथ । उत्तरापथः । पूरुषः । नारकः ।

चौ ॥३०१॥ अचतौ लुप्तनकाराकारे परत पूर्वस्य दीर्घभवति । प्राचः । प्राचा । प्रतीचः । प्रतीचा । प्राची । प्रतीची । दधीच । मधूचः । दधीची । मधूची ।

*ढूखेऽणः ॥३०२॥ ढ्रोः ख यस्मिन् तत् ढ्रख तस्मिन् ढ्रूखे पूर्वस्याणो दीर्घभवति । लीढ । उपगूढ । अग्नीरथेन याति । इन्दूरथमारोहति । नीरक्त । नीरजः । दूरक्त । अण इति किं ? तृढ ।

सहवहोऽस्यौ ॥३०३॥ सहिवहोरस्य ढ्रूखे ओत्व स्यात् । सोढा । सोढु । सोढव्य । वोढा । वोढुं वोढव्य । अस्येति किं ? ऊढः । ऊढवान् ।

इति शब्दार्णवापरनाम्नि जैनेन्द्रमहाव्याकरणे शब्दार्णवचन्द्रिकायां वृत्तौ चतुर्थाध्यायस्य तृतीयः पाद ॥३॥

## चतुर्थःपादः

गोः ॥ १ ॥ गोरित्ययमधिकारो वेदितव्य आचतुर्थपादपरिसमाप्तेः । वक्ष्यति—केऽणः प्रादेश । कुमारिका । गोरिति किं ? कुमारीं कायतीति कुमारीकः ।

*हलो यणिरः ॥ २ ॥ गोरवययाद्धलः परस्य यणिगतस्य दीर्घो भवति । सवीतः । शूनः । आहूत । जीनः । हल इति किं ? उत । उतवान् । उतिः । उत्त्वा । गोरिति किं ? निरुत । दुरुत ।

नाम्यतिसृचतसृ ॥३॥ तिसृचतसृवर्जितस्य गोर्दीर्घो भवति नामिपरे । सर्वज्ञाना । मुनीना । साधूनां । नामीति किं ? चर्मणा । अतिसृचतसृ इति किं ? तिसृणा । चतसृणा । गोरिति किं ? क्रिमिणा पश्य । परमना पश्य ।

नुर्वा ॥ ४ ॥ नुर्नामि परे वा दीर्घो भवति । नृणा पतिः । नृणा पतिः ।

नोङः ॥ ५ ॥ नकारान्तस्य गोरुङो दीर्घो भवति नामि परतः । पचाना । सप्तानां । अष्टाना । नवाना ।

धेऽक्रौ ॥ ६ ॥ क्रिवर्जिते धे नोङो दीर्घो भवति । धनानि । राजा । राजानौ । राजनः । राजान । तक्षा । तक्षाणौ । अकाविति किं ? हे राजन् ।

*स्महतोः ॥ ७ ॥ सकारान्तस्य महतश्च धेऽक्रौ नोङो दीर्घो भवति। श्रेयांसि । यशांसि । सर्पींषि । धनूंषि । श्रेयान् । श्रेयांसौ । श्रेयांसः । श्रेयांसम् । श्रेयांसौ । महान् । महान्तौ । महान्तः । महान्तं । महान्तौ । अक्राविति किं ? हे श्रेयन् । हे महन् ।

स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणां ॥ ८ ॥ स्वसादीनां तृजन्तानां अपश्च धेऽक्रौ दीर्घो भवति । स्वसारौ । स्वसारः । स्वसारं । स्वसारौ । नप्तारौ । नेष्टारौ । । त्वष्टारौ । क्षत्तारौ । होतारौ । पोतारौ । प्रशास्तारौ । वदितारौ जनापवादान् । कर्तारौ । कर्तारः । आपः । स्वापि तदा गानि । नप्त्रादिग्रहणं नियमार्थं । उणादिसिद्धानामेषामेव दीर्घो नान्येषां । मातरौ । पितरौ । जामातरौ । दुहितरौ ।

इनहनपूषार्यम्णां शौ ॥ ९ ॥ एषामुङो दीर्घो भवति शौ परे । बहुदण्डीनि । बहुवाग्मीनि कुलानि । बहुभ्रूणहानि । बहुपूषाणि । बह्वर्यमाणि । धेऽक्राविति सिद्धे नियमार्थोऽयं योगः । एषां शावेव दीर्घो नान्यत्र । दण्डिनौ । वृत्रहणौ । पूषणौ । अर्यमणौ ।

सौ ॥ १० ॥ इन्नादीनामुङो दीर्घो भवति सौ परे । दण्डी । छत्री । वाग्मी । तपस्वी । वृत्रहा । ब्रह्महा । पूषा । अर्यमा ।

अत्वसोऽभ्वादेः ॥ ११ ॥ अत्वन्तस्यासन्तस्य चाभ्वादेः सावक्रौ दीर्घो भवति । भवान् । गुणवान् । मुक्तवान् । सुपयाः । वेधा । चन्द्रमा । अभ्वादेरिति किं ? पिंडग्रः । चर्मव । इषुमस्यास्तीति इष्वः । अक्रावित्येव हे भवन् । हे सुपयः ।

ह्रस्य झल्क्वोः क्ङिति ॥१२॥ ङमन्तस्य गोरुङो दीर्घो भवति झलादौ क्ङिति क्वौ च परतः। शान्त । शशान्तः । दान्त । ददान्तः । तान्त । ततान्तः । प्रतान् । प्रशान् । प्रदान् । ह्रस्येति किं ? पक्तिः । झल्क्वोरिति किं ? शम्यते । दम्यते । क्ङितीति किं ? यन्ता ।

*हन्यचां सनि ॥ १३ ॥ हन्तेरिणिगादेशस्य गमेरजन्तानां च दीर्घो भवति झलादौ सनि परतः । जिघांसति । जिगांस्यते । अधिजिगांस्यते । अधिजिगांसते । चिचीषति । चिकीर्षति ।

तनो वा ॥ १४ ॥ तनोतेः सनि झलादौ वा दीर्घो भवति । तितांसति । तितंसति । झलीति किं ? तितनिषति ।

क्रमः क्त्वि ॥१५॥ क्रमः क्त्वि झलादौ वा दीर्घो भवति । क्रन्त्वा । क्रान्त्वा । झलादावित्येव क्रमित्वा ।

च्छ्वोः शूठ् के च ॥१६॥ छकारवकारयो

शूठावादेशौ स्तः हसेऽ झलादौ क्ङिति कौ च परत । प्रश्नः विश्नः । पृष्ट । पृष्टवान् । पृष्ट्वा । पृष्टिः । शब्दप्राट् । स्योमा । स्यूतः । स्यूतवान् । स्यूत्वा । स्यूति । पटस्यू । यूतः । यूतवान् । यूत्वा । यूतिः । अक्षयूः । अक्षद्युवौ, अक्षद्युवः । हिरण्यद्यूः । हिरण्यद्युवौ । हिरण्यद्युव ।

ज्वरत्वरश्रिव्यविमवां चोङ्गे ॥ १७ ॥ ज्वरादीनां वकारस्योङ्श्च ऊर्भवति झलादौ कौ च । जूर्ति । जूः । जुरौ । जुरः । तूर्ति । तूः । तुरौ । तुरः । तूर्ण । तूर्णवान् । श्रोमा । श्रूतः । श्रूतवान् । श्रूः श्रुवौ । श्रुवः । ऊतिः । ऊः । उवौ । उवः । मूर्तिः । मूः । मुवौ । मुव ।

र ख ॥ १८ ॥ रेफात्परयो छ्वोः ख भवति । हुर्छा–हूर्णः । हूर्णवान् । हूः । हुरौ । हुरः । हूर्ति । मूर्छा–मूः । मुरौ मुरः । मूर्त । मूर्तवान् । मूर्त्ति । तुर्वी–तूर्ण । तूर्णवान् । तूः । तुरौ । तुरः । धुर्वी–धूः । धुरौ । धुरः । धूर्ण । धूर्णवान् । धूर्ति ।

*ईटीटः ॥ १९ ॥ इटः परस्य ईटि परे अर्थात् से ख भवति । अदेवीत् । असेवीत् । अकोपीत् । अमोषीत् । ईटीति किं ? अलविषु । इट इति किं ? अकोपीत् ।

*असिद्धोऽत्राभादयुगुक् ॥ २० ॥ असिद्ध भवत्याभाच्छास्त्र अत्र शास्त्रे युगुग्वर्जिते कर्तव्योपधि, शाधि इत्यत्र एत्वशाभावयो कृतयो शल्लक्षणं धित्वमप्राप्तमसिद्धत्वात् भवति । जहीत्यत्र जभावे कृतेऽतो हेरुप् प्राप्तःसिद्धत्वान्नास्ति । अत्रेति किं ? अभाजि । एपि नख नासिद्ध । आभादिति किं ? रराधिव । रराधिम । एत्वमेनुम्नासिद्ध । अयुगुगिति किं ? उपादिदीये । बभूव । याणि दवि च कर्तव्ये युगुवुको नासिद्धौ ।

श्नान्नः खे ॥ २१ ॥ श्नात्परस्य नकारस्य ख भवति । व्यनक्ति धर्मे । भनक्ति पाप । श्नादिति किं ? नदनः । सानुबधग्रहण किं ? यत्नानां ।

हलुङः क्ङित्यनिदितः ॥ २२ ॥ हलुङो नकारस्य ख भवति अनिदितो गो क्ङिति परे । ध्वस्त । ध्वस्तवान् । दनीध्वस्यते । सूस्यते । सनीसूस्यते । हल्ग्रहण किं ? नीतं । उङः इति किं ? नद्धः । क्ङितीति किं ? ध्वसित्वा । सूसित्वा । अनिदित इति किं ? शक्यते । शाशक्यते । मवयते । मामक्यते ।

*कपलगोगविकारोपतापे ॥ २३ ॥ कपिलग्योर्नख भवति अगविकारोपतापयोः क्ङिति । विकपित । विलगित ।विकपिता विलगितोऽन्यत्र ।

गमहनजनखनघसोऽनाङि ॥ २४ ॥ गमादीनां हलुङः ख भवति क्ङिति अनङ्परे । जग्मतुः । जघ्नतुः । जघ्नुः । जज्ञे । जज्ञाते । जज्ञिरे । चख्नतुः । चख्नुः । जक्षतु । जक्षु । अनङीति किं ? अगमत् । अघसत् ।

*दशसजः शपि ॥ २५ ॥ दशिसज्योर्नख भवति शपि परे । दशति । दशत । दशति । सजति । सजतः । सजति ।

रजेः ॥२६॥ रञ्जेर्नकारस्य शपि परत ख भवति । रजति । रजत । ।

णौ मृगरमणे ॥२७॥ रञ्जेर्नस्य णौ परे ख स्यात् मृगरमणार्थे । रजयति मृगान् व्याध । मृगरमण इति किं ?रञ्जयति सभां नट. ।

घञि भावकरणे ॥२८॥ रञ्जेर्नख भवति भावे करणे च घञि परतः । रजन रज्यतेऽनेन वा रागः भावकरण इति किं ?रज्यतेऽस्मिन्निति रगः

स्यदो जवे ॥ २९ ॥ स्यदेर्घञि नलमनप् च निपात्यते जवेऽर्थे । गोस्यदः । अश्वगोस्यदः ।

जव इति किं ? घृतम्यदः ।

* दशनावोदैधौद्मश्रथहिमश्रथाः ॥३०॥ दशनादयो निपात्यतेऽनङादौ परतः । दशनः । दंशेर्नखं । अवोदः । उंदेर्घञि नखं । एधः । इंधेर्घञि नखैपौ । औद्मः । उदेर्मनि नखैपौ । श्रथः । हिमश्रथः । प्रहिमाभ्यां श्रंथेर्घञि नखमे-त्वमावौ निपात्यौ ।

नांऽचोर्च्ये ॥३१॥ अंचेः पूजायामर्थे नखं न भवति । अंचितः शांतिनाथः । अंचितवान् जिनं । अंचित्वा गुरून् गतः । अर्चे इति किं ? उदक्तमुदकं कूपात् ।

क्त्वि स्कंदस्यंदोः ॥३२॥ अनयोः क्त्वा परे नखं न स्यात् । स्कंत्वा । स्यंत्वा । क्त्वी-ति किं ? प्रस्कद्य । प्रस्यद्य ।

*नशजोर्वा ॥ ३३ ॥ नशेर्जकारांतस्य च क्त्वि परे नखं वा स्यात् । नष्ट्वा । नंष्ट्वा । रक्त्वा रंक्त्वा । भक्त्वा । भंक्त्वा ।

भंजेर्णौ ॥ ३४ ॥ भंजेर्णौ परतः नखं वा स्यात् । अभाजि । अभंजि पाप मुनिना ।

*शासोऽङ्हल्कीत् ॥ ३५ ॥ शासो गोरुङः इद्भवति अङि हलादौ च क्ङिति परतः । आशिषत् । शिष्टः । शिष्टवान् । शिष्ट्वा । शिष्टिः । शिष्यः । शिष्मः । अङ्हलीति किं ? शशा-सतुः । शशासुः ।

क्वौ ॥ ३६ ॥ शास उङः क्वाविर्त्वं स्यात् । आर्यशीः ।

शा हौ ॥ ३७ ॥ शासः शा इत्ययमादे-शो भवति हौ परे । प्रशाधि । अनुशाधि ।

हंतेर्जः ॥ ३८ ॥ हतेर्ज इत्ययमादेशो भवति हौ परतः । जहि मन्युं पापं वा ।

*हन्मन्यमरम्ननमगमवनातितनादेर्ङ्खं झलि ॥ ३९ ॥ हनादीनां वनतेस्तनादीना च झलादौ क्ङिति परे ङ्खं स्यात् । हतः । हतवान् । हत्वा । हतिः । मतः । मतवान् । मत्वा । मतिः । यतः । यतवान् । यत्वा । यतिः । रतः । रत-वान् । रत्वा । रतिः । नतः । नतवान् । नत्वा नतिः । गतः । गतवान् । गत्वा । गतिः । वतः । वतवान् । वत्वा । वतिः । ततः । तत-वान् । तत्वा । ततिः । क्षतः । क्षतवान् । क्षत्वा । क्षतिः । क्षितः । क्षितवान् । क्षित्वा । क्षितिः । ऋतः । ऋतवान् । ऋत्वा । ऋतिः । तृतः । तृतवान् । तृत्वा । तृतिः । घृतः । घृतवान् । घृत्वा । घृतिः । वतः । वतवान् । वत्वा । वतिः हनादीनामिति किं ? शांतः । दांतः । झलीति किं ? हन्यते । मन्यते ।

प्ये ॥ ४० ॥ हनादीनां प्ये परे ङ्खं भवति । प्रहत्य । प्रगत्य । प्रतत्य । प्रयत्य । प्रक्षत्य ।

वा मः ॥ ४१ ॥ हनादीनां मांताना प्ये परे ङ्खं वा भवति । नियत्य, नियम्य । वियत्य, वियम्य । प्रणत्य, प्रणम्य । आगत्य, आगम्य ।

गमादीनां क्वौ ॥ ४२ ॥ एषा ङख भवति क्वौ परतः । जनगत् । कलिंगगत् । मोक्षगतो मुनयः । संयत् । सुमत् । परीतत् । सुतत् ।

न क्तिचि दीर्घ ॥ ४३ ॥ हनादीना क्तिचि परे ङख दीर्घ न भवति । हन्यादिति हंतिः । मंतिः । यंतिः । रंति । नंतिः । गंति । तंतिः ।

वन्याः ॥ ४४ ॥ ङातस्य गोः वनि परे आत्व भवति । विजावा । अग्रेगावा, दधिक्रावा ।

जन्सन्खनां ॥ ४५ ॥ एषां ङस्य झलादौ क्ङित्याकारादेशो भवति । जातः । जातवान् । जात्वा । जातिः । सातः सातवान् सात्वा । सातिः । खातः । खातवान् । खात्वा । खातिः ।

सनि ॥ ४६ ॥ जनादीना सनि झलादौ

आत्व स्यात् । सिषासति । झलीति किं ? जिज निषते । सिसनिषति । चिखनिषति ।

ये वा ॥ ४७॥ तेषां यकारे किस्यात्व वा स्यात् । जायते । जन्यते । जाजायते । जज न्यते । सायते । सन्यते । सासायते । ससन्यते खायते । खन्यते । चाखायते । चखन्यते ।

तनेर्यकि ॥ ४८ ॥ तनोतेर्यकि आत्व वा स्यात् । तायते । तन्यते ।

सन क्तिचि खं च ॥४९॥ सनः खमाश्च वा स्यात् क्तिचि परतः। सतिः सातिः सतिः ।

अगे ॥ ५० ॥ अगे इत्ययमधिकारो ज्ञेय । वक्ष्यति–हलो यः । बेभिदिता । चेछिदिता । अग इति किं ? बेभिद्यते । चेछिद्यते ।

* भ्रस्जरसोऽट् ॥ ५१ ॥ भ्रस्जेः रेफसकारयो रमेऽट् भवति वा । भृष्टा । भर्ष्टा । भ्रष्टुं । भर्ष्टुं भर्ष्टव्य । भृष्टव्य । भर्जनं । भ्रजन । भर्गःभ्रज्जः

*दरिद्र' ख लुङि ॥ ५२ ॥ दरिद्रातः खं वा स्यात् लुङि परतः । अदरिद्रात् । अदरिद्रासात्

अस्मन्वुण्ण्वने ॥ ५३ ॥ दरिद्रातेरग ख स्यात् सकारादिसन वुण ण्वु अनट च विहाय दरिद्यात् । दरिद्यते । अस्मन्वुण्ण्वने इति किं ? दिदरिद्रासति । दरिद्रायको व्रजति । दरिद्रा यक । दरिद्राण । सकारादिविशेषण सन किं ? दिदरिद्रिषति ज्ञापकमिदमेव दरिद्राते सनीड्विकल्पस्य ।

हलो यः ॥ ५४ ॥ हलः परस्य यकारस्य ख भवत्यगे परत । बेभिदिता । बेभिदितु । बेभिदितव्य । मरीमृजिता । मरीमृजकः । हल इति किं ? ऋद्धूयिता । लोलूयिता ।

या क्य ॥ ५५ ॥ हल क्यच्क्यङोः खं वा स्यात् अगे परत । समिधिता । समिध्यिता । समिधितु । समिध्यितु । दृषदिता । दृषधिता । दृषदितु । दृषधितु । दृषदितव्य । दृषधितव्य ।

* अतः ॥ ५६ ॥ अकारान्तस्य ख भवत्यगे परतः । चिकीर्षिता । चिकीर्षितु । चिकीर्षितव्य । प्रचिकीर्ष्य ।

णेः ॥ ५७ ॥ णेः ख भवत्यगे परत । अततक्षत् । कार्यते । कारण । कारकः ।

ते सेटि ॥ ५८ ॥ तसञ्ज्ञके सेटि परे णे ख भवति अगे परतः । कारितः । कारितवान् । हारितः । हारितवान् । गणित । लक्षितं । नियमार्थोऽय योगः त एव सेटि नान्यस्मिन् । कारयिता । हारयिता ।

*नामतास्वाय्येत्न्वौ ॥ ५९ ॥ आमादिषु परतो णे ख न स्यात् । कारयाचकार । हारयांचकार । गडयतः । मडयंतः । स्पृहयालु । महयाय्यः । स्तनयित्नुः । गदयित्नु ।

य्येऽय् यिपूर्वात् ॥ ६० ॥ यिपूर्वाद् वर्णाद् परस्य णेरयादेशो भवति प्ये परत प्रक्थय्य । प्रशमय्य । प्रवेभिदय्य । प्य इति किं ? प्रवेभिदितः । यिपूर्वादिति किं ? प्रतिपाद्य गतः ।

वाऽऽपः ॥ ६१ ॥ आपः परस्य णेरय् भवति वा प्ये परे । प्रापय्य । प्राप्य ।

क्षेर्दीः ॥ ६२ ॥ क्षेः प्ये परे दीर्भवति । प्रक्षीय । परिक्षीय ।

तेऽण्ये ॥ ६३ ॥ अण्यार्थे तसञ्ज्ञे क्षेर्दीर्भवति । क्षीणो देवदत्तः । अक्षीणो यज्ञदत्तः । अण्य इति किं ? क्षितमस्य ।

वा दैन्याक्रोशे ॥ ६४ ॥ क्षेर्वा दीर्भवति दैन्ये आक्रोशे च तेऽण्ये परतः । क्षितोऽय । क्षीणोऽय । क्षितोऽसि जाल्म । क्षीणोऽसि जाल्म ।

*सिस्यसीयुट्तासां दौ ग्रहाऽऽदृहनदृशो षिट् ॥

॥ ६५ ॥ अतेरन्नेभ्यो हनदृशाभ्यां च परेषां स्यादीनां कर्मणि ञिड् वा स्यात् । अमाहिपाता । अग्रहीषाता । ग्राहिष्यते । ग्रहीष्यते । ग्राहिषीष्ट । ग्रहीषीष्ट । ग्राहिता । ग्रहीता । अम्लायिषाता । अम्लासाता । ग्लायिष्यते । ग्लास्यते । ग्लायिषीष्ट । ग्लासीष्ट । ग्लायिता । ग्लाता । अचायिषाता । अचेषाता । अस्ताविषाता । अस्तोषाता । चायिष्यते । चेष्यते । स्ताविष्यते । स्तोष्यते । अघानिषाता । अहसाता । अघानिषाता । घानिष्यते । हनिष्यते । घानिषीष्ट । वधिषीष्ट । घानिता । हता । अदर्शिषाता । अदृक्षाता । दर्शिष्यते । द्रक्ष्यते । दर्शिषीष्ट । दृक्षीष्ट । दर्शिता । द्रष्टा । स्यादीनामिति किं ? ददे दानं । लवितारः केदारं । कर्मणीति किं ? लविष्यति केदारं । पविष्यति यवराशिं । अतादिग्रहणं किं ? पक्ष्यते ओदनः ।

ङीङोऽचि क्ङिति युक् ॥ ६६ ॥ ङीङः क्ङित्यजादौ परे युगागमो भवति । उपदिदीयिषे । उपदिदीये । उपदिदीयाते । उपदिदीयिरे । अचीति किं ? उपदीयते । क्ङितीति किं ? उपदानं ।

इटि चाल्व ॥ ६७ ॥ इट्यजादौ च क्ङिति परे आकारान्तस्य ख भवति । पपिथ । जग्लिथ । पपतुः । पपुः । आहुव । अपा ।

ईर्ये ॥ ६८ ॥ आकारान्तस्य ये परे ईत्वं भवति । देयं । धेयं । म्येयं ।

घुमास्थागापाहाक्सां हलि ॥ ६९ ॥ एषां हलादौ क्ङिति ईद् भवति । दीयते । देदीयते । धीयते । देधीयते । धीत वत्सेन । मीयते । मेमीयते । स्थीयते । तेष्ठीयते । गीयते । जेगीयते । गीतः । गीतवान् । पीयते । पेपीयते । पीतः । पीतवान् । पीत्वा । हीयते । हीनः । हीनवान् । अवसीयते । अवमेमीयते । हलीति किं ? ददतुः ।

लिङ्येत् ॥ ७० ॥ घ्वादीनामेद्भवति लिङि परे । देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् ।

वाऽन्यः स्फादेः ॥ ७१ ॥ आकारान्तस्य स्फादेः स्थादीनस्य लिङ्येद्वा स्यात् । ग्लेयात् । ग्लायात् । म्लेयात् । म्लायात् । स्नेयात् । स्नायात् । अन्य इति किं ? स्थेयात् । स्फादेरिति किं ? पायात् ।

न ल्ये ॥ ७२ ॥ घ्वादीनामीत्वं न स्यात् ल्ये परे । प्रदाय । प्रधाय । प्रमाय । प्रस्थाय । प्रगाय । प्रपाय । अवहाय । अवसाय ।

वेर्मेङः ॥ ७३ ॥ मेङः ल्ये इत्वं वा स्यात् । अपमित्य । अपमाय ।

*लुङ्लङ्लृङ्क्ष्वमाङाऽट् ॥ ७४ ॥ गोरडागमो भवति लुङादिषु परतः माङ्योगं विहाय । अकार्षीत् । अकरोत् । अकरिष्यत् । अहार्षीत् । अहरत् । अहरिष्यत् । ऐक्षिष्ट । ऐक्षत । ऐक्षिष्यते । औब्जीत् । औब्जत् । औब्जिष्यत् । अमाङ इति किं ? मा हार्षीत् । मा भवान् कार्षीत् । मा स्म करोत् । मेक्षिष्ट । मा स्मेक्षत । मौब्जीत । मानिरसीत् । मास्म निरदीत् । मानिरदत् । अग इति निवृत्त ।

*हल्ञ्नुयुभ्रुवोऽचीयुवौ ॥ ७५ ॥ एषां इवर्णोवर्णयोरियुवौ स्तः अजादौ परे । प्राप्नुवन्ति । शक्नुवन्ति । चिक्षियतुः । चिक्षियुः । तुष्टुवतुः । तुष्टुवुः । भ्रुवौ । भ्रुवः । हल्ञ्न्विति किं ? चिन्वन्ति । सुन्वन्ति । अचीति किं ? नीः । लूः ।

चम्पास्त्वे ॥ ७६ ॥ चन्य य्वोः इयुवौ स्तः असेऽचि परतः । इयर्ति । इयर्तः । इयूति । इयेष । उवोष । अन्य इति किं ? ईषतुः । ईषुः । ऊषतुः । ऊषुः ।

स्त्रियाः ॥ ७७ ॥ स्त्रीशब्दस्येय् भवत्यचि परतः । स्त्रियौ । स्त्रियः ।

वाऽम्शसोः ॥७८॥ स्त्रिया वा इय् भवति अम्शसो परतः। स्त्रियं । स्त्रीं । स्त्रियः । स्त्रीः।

ओतः ॥ ७९ ॥ ओतः आकारो भवति अम्शसोः परतः । गां । गाः । द्यां । द्याः ।

*यणिणः ॥ ८० ॥ इणोऽचि यण् भवति । यन्ति । यन्तु । यन् ।

×वेङः ॥ ८१॥ इङो यण् वा भवति अचि परतः। अधीयति । अधियति । अधीयन्। अधियन्।

एर्गिवाकृचादुङोऽसुधियः ॥८२ ॥ गिवाकृचाद् परस्माद् उङ परस्य इवर्णस्य यण् भवत्यचि सुधीशब्दं त्यक्त्वा । सुन्यौ । सुन्यः । परिण्यौ । परिण्यः। ग्रामण्यौ । ग्रामण्यः । सेनान्यौ । सेनान्यः । चिच्ये । चिच्यिरे । निन्यतुः । निन्युः । गिवाकृचादिति किं ? नियौ । नियः । उङ इति किं ? यवक्रियौ । असुधिय इति किं ? सुधियौ । सुधियः ।

सुप्योः ॥ ८३ ॥ गिवाकृचादुङः परस्योवर्णस्य सुप्यजादौ परे यण् भवति । सुल्वौ । सुल्वः।खलप्व्यः।सुपीति किं ? लुलुवतुः। लुलुवुः ।

दृन्करपुनर्वर्षाभ्यो भ्वः ॥ ८४ ॥ एभ्यो भवतेर्यण् भवति अजादौ सुपि परे । दृन्भ्वौ । दृन्भ्वः । करभ्वौ । करभ्वः । पुनर्भ्वौ। पुनर्भ्वः । वर्षाभ्वौ । वर्षाभ्वः । नियमोऽयं—एभ्य एव भ्वो यण् भवति नान्यस्मात्।स्वयंभुवौ।स्वयंभुवः ।

लुङ्लिटोर्वुक् ॥ ८५ ॥ भुवो वुक् भवति लुङ्लिटोरचि परे । अभूवम् । अभूवन् । बभूव । बभूवतुः ।

होर्ग च ॥ ८६ ॥ होरकारस्य वकारादेशो भवत्यजादौ गे परतः। जुहुवतुः । ग इति किं ? जुहुवतुः । जुहुवुः ।

गोहेरूदुङ ॥ ८७ ॥ गोहेरुङ ऊद् भवति अचि परतः । निगूहते । निगूहयति । निगूहकः । साधुनिगूही । निगूह निगूह निगूहो वर्तते । गूहति । उपगूहकः । गोहेरिति विकृतनिर्देशः,किं ? निजुगुहे । निजुगूहतुः,। अचीति किं ? निगाढा । निगोढु । निगोढव्य ।

दोषो णौ ॥८८॥ दोषः उङो णौ परतः ऊद् भवति । दूषयति । दूषयत । दूषयति । णौ इति किं ? दोषः ।

वा चित्ते ॥८९॥ दोषो णावुङःऊद्वा स्यात् चित्तार्थे । चित्तं दूषयति चित्तं दोषयति । प्रज्ञा दोषयति । प्रज्ञा दूषयति । चित्त इति किं ? एकान्तवादप्रयोगः दूषयति ।

* घटादिज्ञपगेवनुजनीजृक्नसुरञ्जोऽमोऽपर्ययमस्वदुःखचमयम मोऽम्ञ्योस्तु दीर्घो ॥ ९० ॥ पर्ययपूर्वस्तनिवर्जितानां घटादीनां ज्ञपेर्वनुजनीजृक्नसुक्नसुरञ्जीनां अमन्तानां च कम्यम्याभिवर्जितानां चोङ भो भवति णौ अम्णिपरे तु दीर्घो । घटयति । घटघट । घाटघाट । अघटि । अघाटि । व्यथयति । [illegible] । व्याथव्याथ । अव्यथि । [illegible] । क्नगयति । क्नगक्नग । क्नागक्नाग । अक्नगि । अक्नागि । वनयति । वनवन । वानवान । अवनि । अवानि । जनयति । जनजन । जानजान । अजनि । अजानि । जरयति । जरजर । जारजार । अजरि । अजारि । क्नसयति । क्नस क्नस । क्नास । क्नास । अक्नसि । अक्नासि । क्नसयति । क्नसक्नस । क्नासक्नास । अक्नसि । अक्नासि । रजयति । रज रज । राज राज । अरजि । अराजि । गमयति । गमगम । गामगाम । अगमि अगामि । दमयति । दमदम । दामदाम । अदमि । अदामि । अप-

पर्यस्तत् ? स्मृत्नमयम इति किं ? परिस्वादयति । परिस्वाद । परिस्वाद परिस्वाद । पर्यस्वादि । मयस्वादयति । अपस्वादमपस्वाद । मया स्वादि । कामयते । काम काम । अकामि । आचामयति । आचाममाचाम । आचामि । आयामयति । आयाममायाम । आयामि । पर्यपपूर्व इति किं ? स्वदयति ।

*शमोऽदर्शे ॥ ९१ ॥ शम मो भवत्यदर्शेऽर्थे णौ अनुव्योम्नु दीर्घा । शमयति राग । शमशम। शामशाम । अशमि । अशामि । अदर्श इति किं ? निशामयति रूप ।

*यमोऽपरिवेषे स्वार्थे च ॥ ९२ ॥ यमेर परिवेषेऽर्थे स्वार्थे च णौ मो भवत्यमन्योम्नु दीर्घा। यमयति । यम यम । याम याम । अयमि । अयामि । अपरिवेषे इति किं ? यामयत्यतिथीन् णाविस्येवाम्य सिद्धे स्वार्थे चेति वचन ज्ञापक मन्येषा स्वार्थे णिचि मो न भवतीति । स्वने वितर्क—स्यामयते ।

*मारणतोषणनिशाने ज्ञश्च ॥ ९३ ॥ मारणादिष्वर्थेषु जानातेः स्वार्थे च णौ परतः मो भवत्यमन्योम्नु दीर्घा । सज्ञपयति मृगान् व्याधः । ज्ञपयति गुरु शिष्यः । ज्ञपयति शरान् । तीक्ष्णीकरोति । स्वार्थ चेति सनु चनार्थश्चशब्दः ।

*चह शाठ्ये ॥ ९४ ॥ चहः शाठ्येऽर्थे स्वार्थे णौ प्रादेशो भवत्यमन्योम्नु दीर्घा । चहयति। चह चह । चाह चाह । अचहि। अचाहि। शाठ्य इति किं ? चह चहं । अचहि । कथादिष्वन्तर्गतत्वादेव चहयतीति सिद्ध वचन तु दीर्घार्थं ।

*वाग्लेर्ज्वलह्वलह्मलग्लस्नावनुवमां ॥ ९५ ॥ ज्वलादीनामणिपूर्वाणा मो वा स्यात् णौ परत । ज्वलयति । ज्वालयति । ह्वलयति, ह्वालयति(?)...ह्मलयति, ह्मालयति. ग्लपयति । स्नपयति, स्नापयति । नमयति, नामयति । वनयति, वानयति । वमयति, वामयति।अणेरिति किं ? प्रज्वालयति । प्रग्लापयति । प्रस्नापयति ।

*खचि ॥ ९६ ॥ खचि परे णौ मो भवत्युप्युदः । द्युतमः । वसुंधरा । पुरंदरः ।

*ह्रादस्ते ॥ ९७ ॥ ह्रादः प्रदेशो भवति तमजक्ते परे । प्रह्रतः । प्रह्रतवान् । त इति किं ? प्रह्रादयति ।

*स्वन्योः ॥ ९८ ॥ क्तिक्त्योः परतः स्फादेः प्रो भवति । प्रस्फातिः ।

*छादेस्त्रद्याद्विगे ॥ ९९ ॥ छादेस्त्रः प्रो भवति घत्ये परे द्व्याद्विगान् विहाय । छदः । प्रच्छद । उरश्छदः । गिरिच्छद । तनुच्छदः । अद्व्याद्विगेति किं ? समुपच्छादः । समुपाभिच्छादः ।

*मन्क्वौ ॥ १०० ॥ छादेः प्रो भवति मन्क्वौ च परतः । छद्मः । प्रच्छद् । उपच्छद् ।

*शल्होर्हिदिः ॥ १०१ ॥ झलन्तात् हौश्चोत्तरस्य हेर्दिर्भवति । विद्धि । छिन्दि । जुहुधि । झल्होरिति किं ? याहि ।

*अतः ॥ १०२ ॥ अः परस्य तस्योप् भवति । भवाति । अस्माति । भवति ।

*अतो हे ॥ १०३ ॥ अकारात्परस्य हेरुप् भवति । भव । दीव्य । तुद । अत इति किं ? स्तुहि । पाहि । हेरिति किं ? भविनात् त्वं ।

*उतोऽस्फात् ॥ १०४ ॥ अस्फादारभ्य य: उकारान्तम्यः तदन्तादुप् भवति । सुनु । चिनु । कुरु । उत इति किं ? इच्छहि । अस्फादिति किं ? अक्षुहि । प्राप्नुहि ।

या म्बोः स्वं ॥ १०५ ॥ अच्छदुः ? ति वा स्यात् मकारवकारयोः परतः । सुन्वः,

सुनुमः । सुन्वः, सुनुवः । सुन्महे, सुनुमहे । तन्मः, तनुमः । तन्वः, तनुवः । तन्वहे, तनुवहे । तन्महे, तनुमहे ।

*कुर्यि च ॥१०६॥ कुञः परस्यातः खं भवति यकारादौ म्वोश्च परतः । कुर्यात् । कुर्यातां । कुर्युः । कुर्वः । कुर्मः । कुर्वहे । कुर्महे । यि चेति किं ? कुरुतः ।

*गेऽतः क्ङिदुत् ॥१०७॥ कृञोऽत उद् भवति गे क्ङिति परतः । कुरुथः । कुर्वंति । क्ङितीति किं ? करोमि ।

श्नऽसः खं ॥१०८॥ श्नसः अस्तेश्चातः खं स्यात् था गे क्ङिति परतः । रुंधंति । स्वः । स्मः । स्थः । स्तः । संति । क्ङितीति किं ? रुणध्मि । अस्मि । असि । अस्ति ।

श्नोरातः ॥१०९॥ श्नोराकारस्य खं भवति गे क्ङिति परतः । संजिहते । मिमते । मिमता । क्रीणंति । क्रीणते । लुनंति । लुनते । श्नोरिति किं ? यांति । आत इति किं ? बिभ्रति ।

हल्यभोरीः ॥ ११० ॥ भुसंज्ञकवर्जितस्य श्नस्य श्ना इत्येतस्य च ईत्वं स्यात् हलादौ क्ङिति परतः । मिमीवहे । मिमीमहे । मिमीषे । मिमीध्वे । मिमीते । लुनीवः । लुनीमः । लुनीतः । हलीति किं ? मिमते । लुनंति । अभोरिति किं ? दद्वः । दद्मः । दध्वः । दध्मः ।

इद् दरिद्रः ॥१११॥ दरिद्रातेरात इत्वं स्यात् हलादौ क्ङिति गे परतः । दरिद्रिवः । दरिद्रिमः । दरिद्रिथः । दरिद्रितः । दरिद्रियात् ।

भ्यो वा ॥११२॥ बिभेतेर्वा इद् भवति हलादौ क्ङिति गे परतः । बिभिवः । बिभीवः । बिभिमः । बिभीमः । बिभिथः । बिभीथः । बिभितः । बिभीतः । बिभियात् । बिभीयात् । गेऽपी किं ? भीतः । भीयते ।

हाकः ॥११३॥ ओहाको वा इत्वं भवति हलि क्ङिति गे परतः । जहिवः । जहीवः । जहिमः । जहीमः । जहिथः । जहीथः । जहितः । जहीतः ।

आ च हौ ॥११४॥ हाको हौ परे आत्वं भवति इश्च वा । जहाहि, जहिहि, जहीहि ।

यि खं ॥११५॥ हाकः खं भवति यकारादौ गे क्ङिति परतः । जह्यात् । जह्यातां । जह्युः ।

*घ्वसो रेच्चखे ॥११६॥ घुसंज्ञानामस्तेश्च हकारादौ हौ परे एत्वं स्यात् तस्य चस्य च खं । देहि । धेहि । एधि । हकारादाविति किं ? दद्यात् । धद्यात् । स्यात् ।

* हल्मध्ये लिट्यतः ॥ ११७ ॥ हलोर्मध्ये वर्तमानस्यातः एच्चखे लः क्ङिति परतः । नेमतुः । नेमुः । पेचतुः । पेचुः । शेकतुः । शेकुः । हल्मध्य इति किं ? आटतुः । आटुः । अत इति किं ? दिदिवतुः । दिदिवुः । तकारः किं ? शशासतुः । शशासुः ।

सेटि ॥ ११८ ॥ सेटि लिटि परतः हल्मध्ये वर्तमानस्यातःएच्चखे लः । येमिथ । पेचिथ । शेकिथ । सेटीति किं ? पपक्थ ।

फलभजोः ॥ ११९ ॥ फलभजोरेच्चखे लः क्ङिति लिटि सेटि च परतः । फेलतुः । फेलिथ । भेजतुः । भेजिथ । भेजे । भेजाते । भेजिरे । नियमार्थोऽयं योगः । एतयोरेव आदेशादेरेच्चखे नान्यस्य । चकणतुः । चकणुः । चकणिथ । जगदतुः । जगदिथ । उवसिथ । इयजिथ ।

त्रप्त्रोः ॥ १२० ॥ त्रपतरत्योर्लिट्येच्चखे लः । त्रेपे । त्रेपाते । त्रेपिरे । तेरतुः । तेरुः । तेरिथ । इदमपि नियमार्थं—अनेकहल्मध्यगतस्यातः त्रपेरेव पम्भिर्द्देश्यस्यातः तरतेरेव नान्यस्य । तत्रसतुः । तत्रसिथ । सस्रतुः । सस्रिथ । विश-

शरतुः। विशशरिथ। चकरतु। चकरिथ।

वधे राधेः ॥ १२१ ॥ वधेऽर्थे राधेर्लिट्येचखे स्तः। रेधतुः। रेधुः। रेधिथ। वध इति किं ? आरराधतुः।

*न शासददवादेः ॥ १२२ ॥ शसददो वादीनां च लिट्येचखे न स्तः। विशशसतुः। विशशसुः। विशशसिथ। दददे। दददाते। दददिरे। ववणतुः। ववणुः। ववणिथ। ववले ववलाते। ववलिरे। ववसे। ववसाते। ववसिरे।

*वा भ्रम्वमत्रसजॄ ॥ १२३ ॥ भ्रमादीनां लिट्येचखे वा स्तः। भ्रेमतुः। भ्रेमुः। भ्रेमिथ। बभ्रमतुः। बभ्रमुः। बभ्रमिथ। वेमतुः। वेमुः। वेमिथ। ववमतुः। ववमुः। ववमिथ। त्रेसतुः। त्रेसुः। त्रेसिथ। तत्रसतुः। तत्रसुः। तत्रसिथ। जेरतुः। जेरुः। जेरिथ। जजरतुः। जजरुः। जजरिथ। भ्रमेरादेशादित्वाद् वमेर्वादित्वात् त्रसेरनेकहल्त्वात् जॄष एपनिर्वृत्ताकारत्वादप्राप्तविकल्पः।

*फणां ॥ १२४ ॥ फणादीनां सप्तानामेचखे वा स्तः क्ङिति लिटि सेटि च परतः। फेणतुः। फेणुः। फणिथ। पफणतुः। पफणुः। पफणिथ। रेजतुः। रेजुः। रेजिथ। रराजतुः। रराजुः। रराजिथ। भ्रेजे। भ्रेजाते। भ्रेजिरे। बभ्राजे। बभ्राजाते। बभ्राजिरे। भ्रेसे। भ्रेसाते। भ्रेसिरे। बभ्रासे। बभ्रासाते। बभ्रासिरे। म्लेसे। म्लेसाते। म्लेसिरे। बम्लासे। बम्लासाते। बम्लासिरे। स्येमतुः। स्येमुः। स्येमिथ। सस्यमतुः। सस्यमुः। सस्यमिथ। स्वेनतुः। स्वेनुः। स्वेनिथ। सस्वनतुः। सस्वनुः। सस्वनिथ।

*श्रन्थिग्रन्थ्योर्नलं च ॥ १२५ ॥ श्रन्थिग्रन्थ्योः क्ङिति लिटि सेटि च परतः एचखे वा स्तः नलं च। श्रेथतुः। श्रेथुः। श्रेथिथ। शश्रन्थतुः। शश्रन्थुः। शश्रन्थिथ। ग्रेथतुः। ग्रेथुः। ग्रेथिथ। जग्रन्थतुः। जग्रन्थुः। जग्रन्थिथ।

*दम्भः ॥ १२६ ॥ दम्भः क्ङिति लिट्येचखे स्तः नलं च। देभतुः। देभुः।

*थे वा ॥ १२७ ॥ दम्भेरेचखे स्तः नलं च थे परे वा। देभिथ। ददम्भिथ।

× पद्दन्नोमास्हृन्निशसन्यूषन्दोषन् यकञ्छकन्नुदन्नासञ्छसाधे ॥ १२८ ॥ पादादीनां पदादयो भवन्त्यधे सुपि वा। पदा, पादेन। दद्भिः। दन्तैः। नसा। नासिकया। मासि। मासे। हृदि। हृदये। निशि, निशायाम्। असृना, असृजा। यूष्णा, यूषेण। दोष्णा, दोषा। यक्ना, यकृता। शक्ना, शकृता। उद्ना, उदकेन। आसनि, आसने। अध इति किं ? पाद।

अनञोऽर्वणोऽसौ ॥ १२९ ॥ अनञ अर्वणः तृभावो भवत्यसौ सुपि परे। अर्वन्तौ। अर्वन्तः। अर्वत्सु। अनञ इति किं ? अनर्वाणौ। असाविति किं ? अर्वा।

भस्य ॥ १३० ॥ भस्येत्ययमधिकारो ज्ञेयः आपादपरिसमाप्तेः। तत्रैवोदाहरिष्यामः।

पादः पद् ॥ १३१ ॥ पाद्यातस्य भस्य पदादेशो भवति। द्विपदः पश्य। द्विपदा। द्विपदी। त्रिपदः। त्रिपदा। त्रिपदे। त्रिपदी। चतुष्पदः। चतुष्पदी। व्याघ्रपदः। व्याघ्रपदी। वैयाघ्रपद्यः। भस्येति किं ? द्विपादौ। द्विपादः।

* वसोर्वस्योरुः ॥ १३२ ॥ भस्य वसोर्वस्योरुः भवति। विदुषः पश्य। विदुषा। विदुषी। पेचुषः। पेचुषा। पेचुषे। पेचुषी।

श्वयुवमघोनोऽद्धिति ॥ १३३ ॥ श्वादीनां वस्योरुः भवति अद्धिति परे। शुनः। शुना। शुने। शुनी। यूनः। यूना। यूने। अतियूनी श्री। मघोनः। मघोना। अद्धितीति किं ?

शुनो विकारः शौवं मांसं । यूनो भावः—यौवनं वर्त्तते । मघोन इदं—माघवनं रूपं ।

अनोऽश्मम्वस्फाद् ॥ १३४ ॥ अन्नंतस्य भस्याकारस्य खं भवति मकारवकारांतात् परं मुक्त्वा । राज्ञः पश्य । राज्ञा । राज्ञी । अश्मफादिति किं ? अश्मनः । वर्मणः । पर्वणः । तत्त्वदृश्वनः ।

पन्हंत्नधृतराज्ञोऽणि ॥ १३५ ॥ पन्हन् इत्येतदंतस्यानःधृतराज्ञश्चाखं भवत्यणि परे भस्य। पूष्णोऽपत्यं पौष्णः । ताक्ष्णः । भ्रूणघ्नोऽपत्यं भौणघ्नः । वार्त्रघ्नः। धृतराज्ञोऽपत्यं—धार्त्तराज्ञः ।

वा ङिश्योः ॥ १३६ ॥ अनोऽकारस्य खं वा स्यात् ङौ शीशब्दे च परे भस्य । राज्ञि । राजनि । लोम्नि । लोमनि । लोम्नी । लोमनी । दाम्नी । दामनी ।

अचः ॥ १३७ ॥ अंचेर्लुप्तनकारस्य खं भवति । प्रतीचः। प्रतीचा । प्रतीची । दधीचः । दधीचा । दधीची । मधूचः-मधूचा । मधूची । अच इति किं ? साध्वंचः । साध्वंचा ।

ईदुदः ॥ १३८ ॥ उदः परस्याच ईत्वं स्यात् । उदीचः । उदीचा । उदीची ।

*आतोऽनापः ॥ १३९॥ आप्वर्जितस्यातः भस्य खं भवति ।'कीलालपः पश्य । कीलालपा । कीलालपे । शुभंयः पश्य । शुभया । टःक्त्वः । अनाप इति किं ? माला कुरु ।

*टिति टेः ॥ १४० ॥ टिसंज्ञकस्य खं भवति टिति परे । मुनौ । साधौ ।

*हृति विंशतेस्तेः ॥ १४१ ॥ विंशतेर्भस्य षत्तिशब्दस्तस्य डिति हृति खं स्यात् । विंशतेः पूरणः विंशः । विंशं शतं । हृतीति किं ?।विंशती ।

*नः ॥ १४२ ॥ नकारांतस्य टेः खं भवति हृति परतः ।आग्निशर्मिः । दैवशर्मिः । औमिः। औडुलोमिः ।

×ञ्ञेः प्रायः ॥ १४३ ॥ ञिसंज्ञकस्य टेः खं भवति हृति परतः । स्वर्भवः सौवः । बहिर्भवो बाह्यः । अकस्माद् भवः-आकस्मिकः । पौनःपुन्यं । न चास्ति—शाश्वतिकः । शाश्वतं । आरातीयः ।

सब्रह्मचर्यादेः ॥ १४४ ॥ एषां टेः खं भवति हृति परतः । सब्रह्मचारिणः शिष्यः साब्रह्मचारः । पीठसर्पिणोऽयं—पैठसर्पः । शिलालिन इमे शैलालाः । शैखंडाः । सुपर्वण इमे सौपर्वाः ।

*श्वचर्मणः संकोचकोशे ॥ १४५॥ श्वचर्मणोः संकोचे कोशे चार्थे टेः खं स्यात् हृति परतः ।शुनोऽयं शौवः संकोचः। चर्मणो विकारः चार्मः कोशः।संकोचकोश इति किं ? शौवनः । चार्मणः ।

*वाऽश्महितनाम्नो विकारापत्ये ॥१४६॥ अश्मन् हितनामनित्येतयोः विकारेऽपत्ये चार्थे वा टिखं भवति हृति परतः । अश्मनो विकारः आश्मः । आश्मनः । हितनाम्नोऽपत्यं हैतनामः । हैतनामनः । अन्यत्र—आश्मनः । हैतनामनः ।

*टखेऽह्नः ॥ १४७ ॥ अन्हऽट खयोरेव टेः खं भवति । उत्तमाहः । द्वे अहनी भूतो भावी वा द्व्यहीनः । त्र्यहीनः । टख इति किं ? अन्हा निर्वृत्तमाह्निकं ।

कद्रोरोऽस्वयंभुवः ॥ १४८ ॥ कद्रूशब्दस्य उवर्णांतस्य च स्वयंभूवर्जितस्य ओत्वं भवति हृति परतः । कद्र्वाः अपत्यं काद्रवेयः । मंडोरपत्यं मांडव्यः । औपगवः । कापटवः । अस्वयंभुव इति किं ? स्वयंभुव इदं स्वायंभुवं ।

दे स ॥ १४९ ॥ उवर्णांतस्य स भवति दे परे । मद्रबाह्वाः अपत्यं माद्रबाहेय । जम्बा अपत्यं जांबेयः ।

*ए: ॥ १५० ॥ अवर्णांतस्य च भस्य स भवति ह्रति परे । दाक्षिः । चौटिः । नाभेय । रौहिणेय । कमडलेयः ।

ङ्यां ॥ १५१ ॥ अवर्णेवर्णयो स भवति ङ्यि परतः।गौरी।कुमारी।कुरुचरी । दाक्षी । प्लाक्षी।

*मत्स्योऽच ॥१५२॥ मत्स्यस्यांऽचो यकारस्य स भवति ङ्या परतः । मत्सी ।

सूर्यागस्त्ययोश्छे च ॥१५३॥ अनयोरुडो यकारस्य स भवति ङ्या छे च परतः । सूर्यस्य भार्या सूरी । अगस्ती । सौरीयः । आगस्तीय । छे चेति किं ? सौर्यं तेजः ।

हलो हृतः ॥१५४॥ हल परस्य हृतो यकारस्य स भवति ङ्या परतः । गार्गी । वात्सी । हल इति किं ? वायुवेगी । हृत इति किं ? ऊरवी ।

क्यच्च्व्यपनाद्यत्यापत्यस्य ॥ १५५ ॥ क्ये च्वौ अनकारादौ च ह्रति हलः परस्यापत्यस्य यकारस्य स भवति । गार्गीयति । गार्गायते । वात्सीयति । वात्सायते । गार्गीभूत । वात्सीभूत । गर्गाणा समूहः गार्गक । वात्सक । वात्सस्यायं वात्सीय । गार्गीयः । क्यच्च्व्यनादिति किं ? गार्ग्यायण । वात्स्यायनः । आपत्यस्येति किं ? सारावे भव सारावयनः । कापिल्यक । हल इत्येर—आत्रेयक ।

राजन्यमनुष्यस्याके ॥ १५६ ॥ राजन्य मनुष्ययोर्यकारस्य स नास्यके परतः । राजन्याना समूहः राजन्यक । मानुष्यक ।

*तैषपौष भे ॥ १५७ ॥ तिष्यपुष्ययोर्यकारस्य स निपात्यते नक्षत्रविषये । तिष्येण गुरुद्वयेन युक्तः तैषः । पौषः । भ इति किं ? तिष्यो देवताऽस्य तैष्यः । पौष्यः ।

*आंत्रमांतितमातितौनियातिपट् ॥१५८॥ अतमादयः शब्दाः कृतवित्तादिनाशा वा निपात्यते । अतिशयेनातिरः अतम । अतितम । अतिक्तमः । तमेऽनिरस्य तिशब्दस्य कशब्दस्य च स निपात्यते । अतिकाडागतः आतितः । अंतिकतः । तमि वा कोप । आतिके साधुः अतियः । अतिकयः । य कोप । अतिके सीदतीत्यतिषद् । अतिषद् । क्विते सदि कलोपश्च वा स्त ।

*बिल्वकादेश्छस्य ॥ १५९॥ बिल्वकादीना छकारस्य स भवति ह्रति परतः। बिल्वाः अस्यां सति बिल्वकीया नदी । तस्या भवः बैल्वकः । वेणुकीया । वैणुकः । वैत्रकीया । वैत्रकः । त्रिकीया । त्रैकः ।

तुरिष्ठेमेयस्सु ॥ १६० ॥ तृशब्दस्य स स्यात् इष्ठे इमनीयसौ परत । अतिशयेन कर्तृमान् करिष्ठः । हरिष्ठः । करीयान् । हरीयान । इमन्ग्रहणमुत्तरार्थं ।

टे ॥ १६१ ॥ टेश्च स भवति इष्ठेमनीयस्सु परतः । पटिष्ठ । पटोर्भावः पटिमा । पटीयान्। लघिष्ठ । लघिमा । लघीयान् ।

णाविष्ठवन्मृदः ॥ १६२ ॥ मृदः इष्ठ इव कार्यं भवति णौ परत । पटुमाचष्टे—पटयति । लघयति । मातृमाचष्टे—मातयति । नदयति । कर्तृमत—करयति । हर्तृमत—हरयति ।

ह्रसिमा । ह्रसीयान् । क्षपिष्ठः । क्षेपिमा । क्षेपीयान् । क्षोदिष्ठः । क्षोदिमा । क्षोदीयान् । स्थूलमाचष्टे—सवयति । दवयति । यवयति । ह्रसयति । क्षेपयति । क्षोदयति ।

प्रियस्थिरस्फिरायादेरः ॥ १६४ ॥ प्रियादीनामिकारादेर्वर्णसंघातस्यात्त्वं स्यादिष्ठेमेयस्सु परतः । प्रेष्ठः । प्रेमा । प्रेयान् । स्थेष्ठः स्थेमा । स्थेयान् । स्फेष्ठः । स्फेमाः स्फेयान् । मापयति । स्थापयति ।

बहुलगुरूरुवृद्धतृप्रदीर्घवृंदारकाणां बंहिगवर्त्रपत्रप्द्राघवृंदाः ॥ १६५ ॥ बहुलादीनां बंहादयो भवति इष्ठेमेयस्सु परतः । बंहिष्ठः । बंहिमा । बंहीयान् । गरिष्ठः । गरिमा गरीयान् । वरिष्ठः । वरिमा । वरीयान् । वर्षिष्ठः । वर्षिमा । वर्षीयान् । त्रपिष्ठः । त्रपिमा । त्रपीयान् । द्राघिष्ठः । द्राघिमा । द्राघीयान् । वृंदिष्ठः । वृंदिमा । वृंदीयान् । बंहयति । गरयति । इत्यादि ।

बहोर्भूस्तात्व ॥ १६६ ॥ बहोर्भूभावो भवति अस्मांजेमेयसोरादेः । बहोर्भावः—भूमा । अतिशयेन बहु. भूयान् ।

*भूयिष्ठ ॥ १६७ ॥ बहोर्भूयादेशो भवतीष्ठे परतः । भूयिष्ठः ।

*ज्यायान् ॥ १६८ ॥ प्रशस्यस्य वृद्धस्य वा ज्यादेशात्परस्येयसोरात्वं निपात्यं । अतिशयेन प्रशस्यः वृद्धो वा ज्यायान् । ज्यायांसौ । ज्यायासः । ज्यायसी । ज्यायः ।

*रः पृथुमृदुकृशभृशदृढपरिवृढस्योः॥१६९॥ पृथ्वादीनां ऋतारम्य रेफादेशो भवतीष्ठेमेयस्सु परतः । प्रथिष्ठः । प्रथिमा । प्रथीयान् । म्रदिष्ठः म्रदिमा । म्रदीयान् । क्रशिष्ठः । क्रशिमा । क्रशीयान् । भ्रशिष्ठः । भ्रशिमा । भ्रशीयान् । द्रढिष्ठः । द्रढिमा । द्रढीयान् । परिव्रढिष्ठः । परिव्रढिमा । परिव्रढीयान् । प्रथयति । म्रदयति । क्रशयति । भ्रशयति । द्रढयति । परिव्रढयति । पृथ्वादेरिति किं ? ऋजिष्ठः । ऋजिमा । ऋजीयान् । ऋजयति । कृष्णिष्ठः कृष्णिमा । कृष्णीयान् । कृष्णयति ।

नैकाचः ॥ १७० ॥ एकाचः टिखं न भवतीष्ठेमेयस्सु परतः । अतिशयेन त्वग्वान्—त्वचिष्ठः त्वग्वतो भावः—त्वचिमा । त्वचीयान् । त्वग्वंतमाचष्टे -त्वचयति । स्रजिष्ठः स्रजिमा । स्रजीयान् । स्रजयति । एकाच इति किं ? अतिशयेन वसुमान् वसिष्ठः ।

अनपत्येऽणीनः ॥ १७१ ॥ इन्नंतस्यानपत्यार्थे अणि परे टिखं न स्यात् । समंततः कुटन सांकोटिनं । सांराविणं । सांमार्जिनं । गुणिन इदं गौणिनं । दांडिनं । छात्रिणं । अनपत्यं इति किं ? बाहुबालिनोऽपत्यं बाहुबलः ।

गाथिविदथिकेशिपाणिगणिस्फादेः॥१७२॥ गाथ्यादीनां स्फादेश्चेनो यदुक्तं तन्न भवत्यणि परे । गाथिनोऽपत्यं गाथिनः । वैदथिनः । कैशिनः । पाणिनः । गाणिनः । स्थाग्विणः । माद्रिणः चाक्रिणः ।

*न्नोऽवर्मणः ॥ १७३ ॥ मन्नंतस्यावर्मणोऽनपत्य एवाणि यदुक्तं तन्न स्यात् । चर्मणा छन्नः चार्मणो रथः । साम देवता अस्य—सामनः वेम्न इद वैमनं । अनपत्य इति किं ? सुषाम्नोऽपत्यं—सौषामः । अवर्मण इति किं ? सौवर्णवर्मणः । हैरण्यवर्मणः ।

ब्राह्मं ॥ १७४ ॥ ब्रह्मणोऽनपत्येऽणि टिखं निपात्यं । ब्रह्मणोऽयं—ब्राह्मो मंत्रः । ब्राह्ममस्त्रं ।

जातौ ॥ १७५ ॥ जात्यर्थे ब्रह्मणोऽनपत्येऽणि टिखं निपात्यं । ब्राह्मी ओषधिः । अनपत्य

इति किं ? ब्रह्मणोऽपत्यं ब्राह्मण ।

*औक्ष ॥ १७६ ॥ उक्ष्णोऽनपत्येऽणि टिम्व निपात्यते । उक्ष्ण इद–औक्ष पद । अनपत्य् इति किं ? उक्ष्णोऽपत्य–औक्ष्णः ।

अन ॥ १७७ ॥ अन्नतस्याणि यदुक्त तन्न स्यात् । सुत्वनोऽपत्य सौत्वनः । याज्वनः । कर्मणो विकारः कार्मणः ।

येऽहौ ॥ १७८ ॥ अहावर्थे येऽनो यदुक्त तन्न स्यात् । सामनि साधुः–सामन्यः । वेमन्यः । मूर्धनि भव मूर्द्धन्य । राज्ञोऽपत्य–राजन्य । अहावििति किं ? राज्ञो भावः कर्म वा–राज्यं ।

खेऽध्वन ॥ १७९ ॥ अध्वन खे परतः टिम्व न भवति । अध्वानमलङ्गामी–अध्वनीनः ।

*ठाकेऽथर्वयूनः ॥ १८० ॥ अथर्वन् युव न्नित्येनयोर्यदुक्त तन्न स्यात् ठाकयो परत । अथर्वाण वेत्त्यधीते वा आथर्वणिकः । यूनो भावो यौवनिका । ठाक इति किं ? अथर्वणोऽय आथर्व । युवा प्रयोजनमस्य–यौविक ।

दण्डिहस्तिनोः फे ॥ १८१ ॥ एतयोः फन्ये टिस्व न भवति । दण्डिनोऽपत्य–दाण्डि नायन । हास्तिनायन ।

वासिनिजिह्माशिनः फिञे ॥ १८२ ॥ एतयोः फौ ढे च परे टिम्व न भवति । वासिनोऽपत्य–वासिनायनिः । जैह्माशिनेय ।

भ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयं ॥ १८३ ॥ भ्रौणहत्यादयो निपात्यते । भ्रूणहन् धीवन् इत्येनयोष्ण्याणि तत्र निपात्य । भ्रूणघ्नो भावः कर्म वा भ्रौणहत्य । धैवत्य । सारवं भवः सारव जल । सरयूशब्दस्यायून्माणिरं । इक्ष्वाकोरपत्य ऐक्ष्वाकः । अन्युस । मित्रयोरपत्य–मैत्रेयः । ढनि योः स । हिरण्यस्य विकारः हिरण्मय जिनगृह । मयटि परत ।



–शीर्षन् शिरसोऽप्ये यि ॥ १८४ ॥ शिरस शीर्षन् भवति प्यमुक्ते यत्ये हलि परे । शिरसि भवः शीर्षण्यः स्वर । अप्य इति किं ? हास्तिशीर्ष्यो ।

–वा केशे ॥ १८५ ॥ शिरसः केशार्थे शीर्षन् वा भवति यत्ये परतः । शीर्षण्याः शिरस्या केशा ।

। शीर्षोऽचि ॥ १८६ ॥ शिरसश्शीर्षादेशो भवति अचादौ हलि परतः । हस्तिशिरसोऽपत्य हास्तिशीर्षिः । स्थूलशिरस इद स्थौलशीर्षं । अचीति किं ? शिरस्कल्प । हलीति किं ? शिरसा नमामि ज्ञातिनाथ ।

इति जैनेन्द्रव्याकरणे शब्दार्णवचन्द्रिकाया
लघुवृत्तौ चतुर्थाध्यायस्य
चतुर्थः पादः ।
समासद्वन्द्वाख्यमध्यायः ॥ ४ ॥

---

# अथ पंचमोऽध्यायः ।

*वोरकः ॥ १ ॥ वोर्णुर्निमित्तकस्य अक इत्ययमादेशो भवति । नन्दकः । वर्द्धकः । कारकः । भागक ।

*फढखछघ आयनेयीनीयिय ॥ २ ॥ फादीनां निरवो गुणनिमित्तानामायनादयो भवति । नडादिभ्यः फञ्–नाडायन । दत्त दिनेय–दैनेय । कुलात् ख–कुलीन । स्वसुर्छ–स्वस्रीय । क्षत्राद् घ–क्षत्रिय । गुणनिमित्तानामिति किं ? फक्कति । ढौकते । खनति । छिनत्ति । घूर्णते ।

झोऽन्त ॥ ३ ॥ झकारस्यान्त इत्यादेशो भवति । भवन्ति । पचन्ते । अदन्ति । शेरते । ...

स्येति किं ? उज्झन् । उज्झिता ।

थादत् ॥ ४ ॥ थात्परस्य झस्य अद् भवति। ददति । ददतु । जाग्रति । जाग्रतु ।

देऽनतः ॥ ५ ॥ दविषयेऽनतः परस्य झस्याद् भवति । चिन्वते । चिन्वतां । अचिन्वत् । विक्रीणते । द इति किं ? पुनति । अनत इति किं ? च्यवंते । उत्प्लवंते ।

* शीङो रत् ॥ ६ ॥ शीङः परस्य झो रद् भवति । शेरते । शेरतां । अशेरत ।

वेत्तेः सिद्धसेनस्य ॥ ७ ॥ वेत्तेः परस्य झो रद् भवति दे सिद्धसेनस्याचार्यस्य मतेन । संविद्रते । संविद्रतां । समविद्रत । संविदते । संविदतां । समविदत ।

भिसोऽत ऐस् ॥ ८ ॥ अकारांतात् भिस ऐस् भवति । जिनैः । सुरैः । असुरैः । नरैः । अत इति किं ? यतिभिः । विद्याभिः । ऐस्करणादतिजरसैः ।

* नेदमदसोऽकः ॥ ९ ॥ आभ्यां ककाररहिताभ्यां भिस ऐस् न स्यात् । एभिः।अमीभिः। अक इति किं ? इमकैः ।अमुकैः ।

स्येनात्ङ्घ्टाङ्सेः ॥१०॥ अतो ङसादीनां स्यादयो भवंति । जिनस्य । जिनेन । जिनात् । अतिजरसेन । आत्करणात्--अतिजरसात् ।

ङेर्य्यः॥ ११॥ अतो ङेर्यो भवति।देवाय। जिनाय । दानाय ।

स्नेः स्मैः ॥ १२ ॥ स्नेः परस्य ङेः स्मै इत्ययमादेशो भवति । सर्वस्मै । विश्वस्मै । अन्यस्मै । तस्मै । यस्मै । कस्मै । अस्मै । अत इति किं ? भवते ।

* ङ्यसेः स्मिन्स्मात् ॥ १३ ॥स्नेरकारांतात्परयोर्ङिङसोः स्मिन्स्मातौ स्तः । सर्वस्मिन् । सर्वस्मात् । विश्वस्मिन्।विश्वस्मात्। अन्यस्मिन् । अन्यस्मात्।तस्मिन् । तस्मात्।यस्मिन् । यस्मात् । कस्मिन् । कस्मात् ।

जसः शी ॥ १४ ॥ स्नेरकारांतात्परस्य जसः शी इत्ययमादेशो भवति । सर्वे । विश्वे । अन्ये । ये । ते । के ।

आप औतः ॥ १५ ॥ आबंतात्परस्यौतः शी भवति । कन्ये पश्य । दामे तिष्ठतः। दामे पश्य ।

नपः ॥ १६॥ नपः परस्य औतः शी भवति। दधिनी स्तः । दधिनी पश्य । पापे स्तः । पापे त्यज । फले । धने । वने । कुले । माले ।

जस्शसोः शिः ॥ १७ ॥ नपः परयोः जस्शसोः शिर्भवति । ज्ञानानि संति । ज्ञानान्याश्रय। एवं--दधीनि । मधूनि । कुलानि । मालानि । जसा सहचरितस्य शसो ग्रहणादिह नेष्यते--पात्रशो ददाति । वनशः प्रविशति ।

* अष्ट औश्॥१८॥अष्टन्शब्दाद् कृताकाराद् परयोर्जस्शसोः औश् भवति । अष्टौ याति । अष्टौ पश्य।कृताकारपरिग्रहादिह न भवति । अष्ट तिष्ठंति ।अष्ट पश्य । ज्ञापकमिदमेवात्वाविकल्पस्य-प्रधानसंप्रत्ययादिह न भवति। प्रियाष्टानस्तिष्ठंति। प्रियाष्टनः पश्य। ओशा सिद्धेऽप्यौश्ग्रहणमष्टावाचक्षते अष्टयतीति क्विबतेऽपि श्रवणार्थमष्टाविति ।

षविलः ॥ १९ ॥ इस्संज्ञकात् जस्शसोः उप् भवति । षट् । पंच । सप्त । अष्ट । नव । दश कति संति वीक्षस्व वा । प्रधाने कार्यसंप्रत्ययादिह न भवति । प्रियपषः प्रियपंचानः तिष्ठंति । प्रियकतीन् पश्य ।

नपः स्वमोः ॥ २० ॥ नपः स्वमोरुप् भवति। दध्यस्ति । दधि पश्य । एवं-- त्रपु । जतु । मधु । उदश्वित् । यत्कुलं, तत्कुलमित्यत्र कृताकृतप्रसंगादित्यं त्यदाद्यत्वं बाधते । यस्य च लक्षणांतरेणाप्रभावेन निमित्तं विहन्यते न तदनित्यामिति ।

–जरसो वा ॥२१॥ जरसन्तात्परो वा स्यमोरु लुभवति । अतिजर , अतिजरस आस्ते पश्य वा ।

इकः इस्व ॥ २२ ॥ इगन्तान्नपो वा स्वमो वा ह्रस्व भवति । हे वारे । हे वारि । हे त्रपो, हे त्रपु । प्रियतिसृ । प्रियत्रि ।

अतोऽम् ॥ २३ ॥ अकारान्तान्नपः स्यमोरम् भवति । दर्शन । धन । वन । कुल । जलमस्ति पश्य वा ।

*पचतोऽनेकतरस्यान्यादेर्दुर् ॥ २४ ॥ एकतरवर्जितस्य पचकस्यान्यादेर्दुगागमो भवति स्वमो परतः । अन्यत् । अन्यतरत् । इतरत् । कतरत् । कतमत् तिष्ठति, पश्यति वा ।पच इति किं ? सम, सिम । अनेकतरस्येति किं ? एकतर । नप इति किं ? अन्य । इतरेण सिद्धेऽन्यतरग्रहण किं ? अन्यतम वन ।

युष्मदस्मदो ङसोऽश् ॥ २५ ॥ आभ्या ङसोऽश् भवति । तव । मम ।

ङेभ्युटोऽम् ॥२६॥ ताभ्या ङेभ्युटोरम् भवति । तुभ्य । मह्यं । त्व । अह । युवा । आवा ।यूय । वय । त्वा । माम् । युवा । आवा ।

शसोऽन् ॥ २७॥ ताभ्या शसोऽन् भवति । युष्मान् । अस्मान् ।

* भ्यसोऽपोऽभ्यम् ॥ २८ ॥ ताभ्यामपो भ्यसोऽभ्यम् भवति । युष्मभ्य । अस्मभ्य ।

* भ्योऽसोऽत् ॥२९॥ ताभ्यामर्थात् तायाः भ्यसो ङसेश्चात् भवति । युष्मद् । अस्मद् । त्वत् । मत् ।

साम आकम् ॥३०॥ ताभ्यामुत्तरस्य साम आकम् भवति । युष्माक । अस्माक ।

त्यास्तिवाक्से वत्वः ॥ ३१ ॥ क्त्वान्तस्य तिसे वाक्से च प्यो भवति । प्रकृत्य । महत्य । उच्चैःकृत्य । नीचैःकृत्य । तिवाक्स इति किं ? अकृत्वा । परमकृत्वा ।

* लौल्येऽसुक्सुक् क्यचि ॥३२॥ गोः क्यचि परे असुक्सुकौ भवतः लौल्येऽर्थे । दध्यस्यति । दधिस्यति । मध्वस्यति । मधुस्यति । क्षीरस्यति । लवणस्यति । लौल्य इति किं ? दधीयति । मधूयति । क्षीरीयति । लवणीयति ।

याभेऽश्ववृषयो ॥३३॥अश्ववृषयोर्याभेऽर्थेऽसुक्सुकौ स्त क्यचि । अश्वस्यति वडवा । वृषस्यति गौः । याभ इति किं ? अश्वीयति । वृषीयति देवदत्त ।

आम्यात् स्ते सुट् ॥३४॥ स्तेरवर्णान्तादामि परे सुडागमो भवति । सर्वेषा । तेषा । येषा । केषा । सर्वासा । यासा । कासां ।

त्रेस्त्रय ॥ ३५ ॥ त्रेस्त्रयो भवत्यामि परे । त्रयाणा । परमत्रयाणा । त्रेरप्रधानत्वादिह न भवति।अतित्रीणा।तिसृणामित्यत्र परेण बाध्यते ।

त्रेल्स्वाप्चतुरो नुट् ॥३६॥ एभ्यो नुड् भवत्यामि परतः । त्रिनाना । षण्णा । पचाना । अष्टानामित्यत्रापि परत्वादीले"ष्णाता चेट्"इत्यत्रग्रहणस्योपदेशार्थत्वादिल इति नुट् । श्रीणां । कुमारीणा । वधूना । मासाना । पूजाना । वारीणा । चतुर्णा ।

इदितोर्धोर्नुम् ॥ ३७ ॥ इदितो धोर्नुमागमो भवति । वदति । वन्दते । वन्दिता । वन्दितु । वंदितव्य।निंदित।निंदितवान् । इदित् इति किं ? पचति । पच । धोरिति किं ? अभैत्सीत् । धिन्विकृण्व्योरिति निर्देशात्त्योत्पत्तेः प्रागेव नुम् । तेन–मरोर्हल , इत्यः सिद्ध । कुडा । हुडा ।कुन्ड्हिरिति सनकारोच्चारण ज्ञापक–इदितो धोर्नुम् न भवति—भेदन ।

शे मुचां ॥ ३८ ॥ मुचादीनां शे परे नुम् भवति । मुचति । लुपति । विंदति । लिंपति ।

सिंचति । कृतति । खिदति । पिंशति । अष्टौ मुचादय । श इति किं ? मोक्ता । मोक्तु ।

। तृफदृफगुफोभशुभां ॥ ३९ ॥ तृफादीनां शे नुम् भवति । तृम्फति । दृम्फति । गुम्फति । उम्भति।शुम्भति।श इति किं ? तर्पिता। तर्प्तु।

नशमस्जेर्झलि ॥ ४० ॥ अनयोर्झलि नुम् भवति । नंष्टा । नंष्टु । नंष्टव्य । नश अदर्शने । टुमस्जौ शुद्धौ । मंक्ता । मंक्तुं । मंक्तव्य । मंक्त्वा । मंक्ष्यति । मिमंक्षति । मस्जेर्नुमि कृते द्वयोः स्फसज्ञाया स्फादिस । झलीति किं ? नशन । मज्जन ।

* जभोऽचि ॥ ४१ ॥ जभेर्नुम् भवत्यचि परतः । जम्भति । जम्भकः । साधुजम्भी । जम्भ जम्भ । जम्भो वर्तते । नित्यत्वादेप प्रागेव नुम् । अचीति किं ? जभ्यते । जाभ्य । जजब्धि ।

* रध ॥ ४२ ॥ रधेरचि नुम् भवति । रन्धयति । रन्धकः । साधुरन्धी । रन्ध रन्ध । रन्धो वर्तते । अचीति किं ? रद्धा । पृथग्वचनमुत्तरार्थं ।

* नेट्यलिटि ॥ ४३ ॥ रधेर्न नुम् भवति इडादावलिटि परतः । रधिष्यति । रधिता । राधितु । राधितव्य । इटीति किं ? साधुरन्धी । अलिटीति किं ? ररन्धिव । ररन्धिम । रेधिवानित्यत्र—कसः कित्त्वसामर्थ्यान्नुमः स । लिटीटि इति कर्तव्ये पूर्वेणैव सिद्धत्वान्नियमो भवति । तत्र च किटीड्यवेत्यवधारणमाहोस्विल्लिट्येवेटीत्युभयथा संभवेऽन्यतरपरिग्रहो दुर्लभः ।

* रभः ॥ ४४ ॥ रभेरनादावलिटि पर्ये नुम् भवति । आरम्भयति । आरम्भकः । साधुरम्भी । आरम्भमारम्भ । आरम्भो वर्तते । अलिटीति किं ? आरेभे । अचीति किं ? आरब्धा । आरभते इति तुदादित्वाच्छे हटुल्लम ।

लभेः ॥४५॥ लभेरलिट्यनादौ नुम् भवति लम्भयति । लम्भकः ।साधुलम्भी । अलिटीति किं ? लेभे । अचीत्येव—लब्धा । लभते—इति तुदादित्वाच्छे नम । न च लभे शतास्ति । यस्य शतुर्नुम्विकल्प स्यात् । लभतीति प्रयोगभावेऽपि "वा नपः" इति वाग्रहणात् व्यवस्था विज्ञायते पृथगारम्भ उत्तरार्थः ।

य्याङ ॥ ४६ ॥ आङः परस्य लभेर्नुम् भवति यकारादौ परतः । आलम्भ्या गौर्ब्राह्मणेन । यीति किं ? आलब्धा । आङ इति किं ? लभ्य । आलम्भ्यागत इत्यत्र नुमोऽन्यत्र सावकाशस्य ख ।

उपात्स्तुतौ ॥ ४७ ॥ उपाल्लभेर्नुम् भवति स्तुत्या यत्ये परतः । उपलम्भ्य धन भवता । स्तुताविति किं ? उपलभ्यमस्माद् वृपलात्किंचित् ।

* वाऽमुण्ण्योः ॥ ४८ ॥ लभेर्वा नुम्भवति अमुण्ण्योः परतः । लम्भलम्भ । लाभं लाभं । अलम्भि । अलाभि ।

* घञ्खेच गे ॥ ४९ ॥ गेः परस्य लभेर्नुम् भवति घञि खेऽमि णौ च परे । उपलम्भः । सुप्रलम्भः । प्रलम्भ प्रलम्भ । प्रालम्भिः । गेरिति किं ? लाभः । ईषल्लभ । अम्ण्योर्नित्यार्थं घञ्खेतु गेरेवेति नियमार्थं वचन जिज्ञासोपलम्भेनेति निर्देशान्न विपरीतो नियमः । गेः घञ्खेष एवेति ।

* सुदुर्भ्यः ॥ ५० ॥ सुदुर्भ्यां व्यस्तसमस्ताभ्यां गिभ्यां गेः पराभ्यां लभेर्घञि खे च नुम् भवति । अतिसुलम्भ । अतिदुर्लम्भः । अतिसुदुर्लम्भ । गेरिति किं ? सुलाभः । सुलभ । दुर्लाभ । दुर्लभ । सुलाभिः । दुर्लभिः । सुदुर्लभ । अतिसुलभमिति पूजायामतिक्रमे चार्थेऽतिः । सुदुर्भ्यां गेरेवेति नियमार्थं वचन ।

उगिदचा धेऽम्वादे ॥ ५१ ॥ उगिनामम्वादीनां अचतेश्च घे नुम् भवति । गोमान् । गोमन्तौ । गोमन्तः । गोमन्त । गोमन्तौ । धनवान् ।

भवती । धनवन्तः । पचन् । पचन्तौ । पचन्तः । प्राङ् । प्राञ्चौ । प्राञ्चः । अभ्वादेरिति किं ? उख्या स्रत् । पर्णध्वत् । स्यादिप्रतिषेधाद्धत्वस्येह । गोमत्यते—गोमान् । गोमती ।

युजिरोऽसे ॥ ५२ ॥ युजिरो नुम् भवति असे घे परतः । युङ् । युञ्जौ । युञ्जः । युञ्जं । युञ्जौ । असे इति किं ? अश्वयुक् । अश्वयुजौ । अश्वयुजः ।

नपोऽच ॥ ५३ ॥ नपोऽजन्तस्य घे नुम् भवति । वनानि । दधीनि । मधूनि । चारित्राणि । अच इति किं ? विमलदिवि । बहुगिरि । अहानि ।

*झलां ॥ ५४ ॥ अचः परा या झल् जातिस्तदन्तस्य नपो घे नुम् भवति । सर्पींषि । धनूंषि । उदश्वित्ति । काष्ठतक्षि ।

– प्राग्वाऽन्तः ॥ ५५ ॥ झलन्तस्य नपोऽतोऽन्त्यझलन्तात् प्राङ् नुम् भवति वा । महोर्ञ्जि । महोर्जि ।

सुपीगोऽचि ॥ ५६ ॥ इगन्तस्य नपः सुप्यजादौ परे नुम् भवति । वारिणी । त्रपुणी । वारिणा । त्रपुणा । सुपीति किं ? तुम्बुरुणो विकारः तौम्बुरवं चूर्णं । इक इति किं ? वने । अचीति किं ? वारिभ्यः ।

भादौ वोक्तपुम्कं पुंवत् ॥ ५७ ॥ इगन्तमुक्तपुम्कं भादावजादौ पुंवत् वा स्यात् । शुचि । साधुः । शुचि । साधु वृत्त । शुचये । शुचिने ब्राह्मणाय । ग्रामण्या । ग्रामणिना कुलेन । चार्वा भार्ये वस्राय । कर्त्रा । कर्तृणा कुलेन । अतिरायां अतिरिणा । चित्रगवे । चित्रगुणे । भादाविति किं ? भाग्नी । उक्तपुम्कमिति किं ? जतुने ।

सख्युराद्यस्थ्यक्ष्णोऽनङ् ॥ ५८ ॥ मर ख्यादीनामनङ् भवति भादावजादौ परतः । सक्थ्ना । सक्थ्ने । अस्थ्ना । अस्थ्ने । दध्ना । दध्ने । अक्ष्णा । अक्ष्णे । अक्ष्णो । नपीति किं ? दधि नाम कश्चित् धानशीलो वा दधिस्तेन दधिना

विदेः शतुर्वसु ॥ ५९ ॥ विद परस्य शतुर्वसुर्भवति । विद्वान् । विद्वांसौ । विद्वांसः ।

न यात् ॥ ६० ॥ यात्परस्य शतुर्नुम् न भवति । ददत् । ददतौ । ददतः । जाग्रत् । जाग्रतौ । जाग्रतः ।

वा नपः ॥ ६१ ॥ नपुंस्यात्परस्य शतुर्वा नुम् भवति । ददन्ति, ददति । जाग्रन्ति, जाग्रति कुलानि ।

शीम्योरात् ॥ ६२ ॥ शीम्योरवर्णान्तात् शतुर्वा नुम् भवति । तुदन्ती, तुदती । पान्ती, पाती कुले । तुदन्ती, तुदती । पान्ती, पाती स्त्री । आदिति किं ? अदती । जानती स्त्री ।

श्यश्यात् ॥ ६३ ॥ आभ्यां शतुर्नुम् भवति शी मु इत्येतयोः परतः । नित्यार्थं वचनं । पचन्ती कुले । पचन्ती कन्या । दीव्यन्ती कुले । दीव्यन्ती कन्या ।

सावनडुहः ॥ ६४ ॥ अनडुह सौ परे नुम् भवति । अनड्वान् ।

*द्यौः ॥ ६५ ॥ दिवः औत्वं निपात्यते सौ परे । द्यौरारमते पुण्येन ।

पथिमथ्यृभुक्षामात् ॥ ६६ ॥ पथ्यादीनामात्वं भवति सौ परे । पन्थाः । मन्थाः । ऋभुक्षाः ।

एद्धे ॥ ६७ ॥ तेषामिकारस्याद्भवति घे परतः । पन्थानौ । पन्थानः । मन्थानं । मन्थानौ । मन्थानः । ऋभुक्षाणं । ऋभुक्षाणः ।

थो न्थः ॥ ६८ ॥ तेषां थकारस्य न्थादेशो भवति घ परे । पन्थाः । मन्था ।

भस्य टे रः ॥ ६९ ॥ तेषां भसंज्ञकानां टे रः भवति । पथः पश्य । पथा । पथे । मथः । मथा । ऋभुक्षः । ऋभुक्षा ।

पुंसोऽसुङ् ॥ ७० ॥ पुंसः असुङ् भवति घे परतः । पुमान् । पुमांसौ । पुमांसः । पुमांसं पुमांसौ ।

न ओतो णित् ॥ ७१ ॥ ओ तान्त घे णिद्भवति ।

